सर्व त-संस्कृत-माला - १

# कणः लुप्तः गृहं दहति

( A Spark Neglected Burns The House )

TOLSTOY

' संस्कृत स्यैव वाण्या तु वर्षं भारत मुह्यतां '

भविष्य पुराणं.



अनुवादकः
को. कृष्णसोमयाजी एम् . ए. एल् ; टि.

गुंटूर्
कलिः ५०५५

सर्व-जन-संस्कृत-माला—१

# कणः लुप्तः गृहं दहति

(A Spark Neglected Burns The House)

OLSTOY

'संस्कृत स्यैव वाण्या तु वर्षं भारत मुह्यतां'

भविष्य पुराणं.

अनुवादकः

को. कृष्णसोमयाजी एम्. ए. एल्; टि.

गुंटूर्

कलिः ५०२१

# परिचयः

कथा इयं मूलतः टालस्टायेन रषियन् भाषायां लिखिता। अस्याः आंग्लः अनुवादः पुनः अद्य मया संस्कृते अनूद्यते।

टालस्टायः, न केवलं रषियन्-कवि-कुलस्य, किंतु जगतः कवि-समाजस्य सर्वस्य अपि प्रथमां श्रेणिं अलंकरोति। रुचिरं-अस्य शिल्पं। मृदुः सरळा च अस्य शैली। सौम्याः उदाराः च अस्य भावाः।

क्रिष्टस्य (of Christ) सत्यः भक्तः अयं कृतबुद्धिः, कर्ता च। अतः एव द्विगुणं फलति अस्य उपदेशः पाठकेषु। सर्वे अस्य विचाराः धर्म्ये—कर्मणि पर्यवस्यंति इति, कर्म-वादिनां भारतीयानां अस्य वाक्येषु प्रीतिः, श्रद्धा, आदरः च।

अत्र कथा-क्रमः, नामानि, 'देश्यं वस्तु' इति सर्वं यथा तथं एव मया रक्षितं। भाषांतरे भावस्य प्रसाराय वाक्यानां विभजनं यत् आवश्यकं तत् एव मया कृतं आस्ते।

अथ भाषा-विषयः — अस्ति हिंदी-राज्य-भाषा; अस्ति च प्रजा-गता आंध्री, द्राविडी वा देश-भाषा; 'मध्ये संस्कृतं कुतः?' इति प्रश्नः। 'संस्कृतं मध्ये न आयाति; किंतु मूले, सर्व-मूले एव तिष्ठति इति, काळत्रये अपि भारतस्य भाषा नाम संस्कृतं एव' इति

च असद् उत्तरं। 'संस्कृतस्यैव वाण्या तु वर्षं भारत मुच्यतां' इति पूराण-वचनं; इदं न जातु मोघं भवितुं अर्हति।

संस्कृतं लोकस्य आद्या भाषा; वेदश्च आद्यः ग्रंथः। संस्कृतस्य वाङ्मयम् सुमहत्, विविधं च। भारते शतशः भाषाः संस्कृत-जन्याः। वंग्ला, मराठी, आन्ध्री, द्राविडी—आदयः एताः १४ अपि, ये शासने मुख्याः मन्यंते। केचित् भाषा-पंडिताः, पश्चिमीयाः एव, यूरपीय-भाषानां अपि मूलं संस्कृतं वदंति। संस्कृतस्य मूलेन एव भाषा-भाषा संवंधान् अपि साधयितुं शक्नुवन्ति। अद्य लोके एकः अपि सभ्यः देशः न विद्यते यत्र संस्कृतं न पठ्यते, न पूज्यते, न प्रीयते च। न एकः अपि विद्वान् यः संस्कृतस्य महत्वं मुक्त-कंठं न गायति। यदि अस्ति तादृशः कोऽपि देशः सः भारतं एव! पश्यत :—

'जपानस्य विद्यालयेषु संस्कृतं नित्यं (compulsory)। अद्य २,००० जपानीयाः विद्वांसः संस्कृतस्य नाना शाखासु परिश्रमं कुर्वन्ति; दिवा निशं च कर्मणि तिष्ठंति।'

**डाक्टरः सोदा टाकी, टोकियो**

'संस्कृत भाषायाः आसिया-भाषासु पश्चिमीय भाषासु च विशिष्टः प्रभावः इति अमेरिकायाः विश्व-विद्यालयेषु महा-विद्यालयेषु च संस्कृत-विभागाः संस्कृताय अधिकं महत्वं ददति। संस्कृतस्य पाठ्य-विषयेषु ऋग्-वेदः अपि अधीयते। संस्कृतस्य उच्चं

शिक्षणं हार्वर्ड, येल, कोलंबिया, कौनेल्, जोन्स्, हापकिन्स्, षिकागो, पेन्सिलवेनिया, वाषिंग्टन् विश्वविद्यालयेषु महाध्यापकै: दीयते। अमेरिकाया: कांग्रसस्य पुस्तकालयस्य प्राच्य-विभागे, संस्कृतस्य हस्त-लिखितानि ४ लक्ष-पुस्तकानि संति प्रचीनानि।'

अमेरिकन् रिपोर्टर:

'गच्छत्सु राज्येषु कालेषु च हिन्दुस्थाने विषय: अयं अद्भुतं आवहति–वैभवोपेता तस्य भाषा। यूरपियै: या: भाषा: शिष्टा: गण्यंते तासां अपि मातृभाषा। ग्रीक् इव मृदु:, लाटिन् इव प्रोढा च। '

टेलर:

'वेदभूम्यां ऋषिभि: अविगतानि न केवलं धर्म-रहस्यानि किंतु विद्युत्, रेडियम्, एलक्ट्रान्स्, विमाना: इत्यादय:।'

व्हीलर विलकाक्स्

'अहो नु खलु चित्रं, यत् लोके सर्वेषु दर्शनेषु भारतीयं एकं एव, यत्न अभिनवस्य प्रकृति-शास्त्रस्य अनुरूपा: वादा: जगत्-परिणामादय: प्रतिपादिता: संति।'

लूयी जकोलियट्

'संस्कृतेन एव भारतस्य एकत्वं अस्माकं प्रतीयते।'

लूयीरिनोव्, प्यारिस् विश्वविद्यालय:

'चित्त-संस्कारकत्वं नाम अनन्यं संस्कृतस्य ।'

भाक्स मुल्लरः

'संस्कृतस्य वाङ्मयं न केवलं भारतस्य किंतु सर्वस्याः मानव-जातेः अपि अत्यन्तं अमूल्यः निधिः ।

बाबू राजेंद्रप्रसादः

'यदि कोऽपि 'तव सत्तमं पित्र्यं धनं किं' मिति मां पृच्छेत्, मम स्पष्टं, अविचारं उत्तरं भवति,'संस्कृतं,तस्य ज्ञानं च' इति। यावत् संस्कृतस्य महत्वं तावत् एव हि भारतं।'

नेहरू-पंडितः

'यावत् संस्कृतेन धार्यते, तावत् विभक्तं अपि भारतं अविभक्तं एव । यदि हिंद्याः राज्य-भाषात्वेन प्रांतीय-भाषाणां मध्ये मनो-मालिन्यं जायेत, तर्हि संस्कृतं एव राज्य-भाषा भवेत् ।'

विनोबा भावे

'लोके बहवः देशाः संस्कृते बद्धादराः इति भवद्भ्यः निवेदने नितरां हर्षं अनुभवामि । संस्कृत-सदृशी भाषा वा, तस्य साहित्यं इव साहित्यं वा लोके अन्यत् नास्ति इति तेषां विदुषां मतं........। अतः संस्कृतस्य लोक-भाषात्वं पुनः पंच-वर्षेभ्यः परं भाविनि प्राच्य-भाषा परिषदः समावेशे विचार-पदं एष्यति ।

श्री लक्ष्मणस्वामि मुदलियारः
भारत प्रतिनिधिः – प्राच्य–भाषा परिषत्,
इस्तंबूल, तुर्की–१९५२

'पुरातनं संस्कृत-साहित्यं एकं भव्यं मंदिरं, यस्मिन् मानवस्य प्राचीन-कालिकं सर्वं ज्ञानं सामंजस्येन संगृहीतं वर्तते। अहं विश्वसिमि यत् अस्य देशस्य बहूनां-जनानां इच्छा असीत् यत् संस्कृतं स्वतंत्र-भारतस्य तथैव राष्ट्र-भाषा भवेत् यथा ऐर्लंडे तस्य मूलभूता ऐरिष्-भाषा राज्य-भाषात्वेन प्रतिष्ठिता; इस्रायल-देशे च तत्रत्या-मूलभूता हीब्रू-भाषा देशस्य राज्यभाषा जाता। तथापि भारते संस्कृत-भाषा नैव किंतु हिंदी राष्ट्र-भाषात्वेन अंगीकृता।'

ह्यूगो वल्वानी
फिन्निष् राज्यदूतः, देहली

'अंग्रेज्याः स्थाने हिंद्याः वा अन्यस्याः कस्याश्चित् प्रांतीय-भाषायाः वा स्थापनात् देशस्य महान् अघातः भविष्यति। माध्यमिक-स्कूलानां पाठ्य-क्रमे अंग्रेजी तिष्ठेदेव। एत दवश्यं वक्ष्यते यत् अंग्रेजी-स्थाने अंग्रेजी-सदृश्यै भारतीयायै अन्तर-राष्ट्रीय-भाषायै महत्त्वं अवश्यं देयं, यस्य अध्ययनात् संसारस्य अन्य-भाषाणां अध्ययने साफल्यं स्यात्। एतत् संबन्धे अप्रेल-मासे समितेः संपूर्णः-विचारः प्रकटी करिष्यते।'

(१९५२ वर्षे भारत-शासनेन नियोजितायाः;
माध्यमिक-विद्या-निरीक्षण-समितेः निवेदनं)

अप्रेलस्य द्वयं गतं। निवेदनं इदं शासकैः शनैः शनैः जीर्यते इव। राज्ये ईदृशानि निवेदनानि बहूनि संति,

यानि महता व्ययेन-श्रमेण च संपादितानि किंतु स्वप्नेऽपि पुनः न चिंतितानि । उपचार मात्रं खलु निवेदनं नाम !

'भारतस्य भाषासु संस्कृतं एकं ईदृशं यत् राष्ट्र-भाषा योग्यतां विभर्ति — — — — संभवति यत् हिंद्यां संस्कृत-शब्दानां अधिकाधिकं मेलनेन पंचाशत् वर्षांतरे संस्कृतं एव सर्व साधारणस्य व्यवहारे आयायात् ।'

श्री बाबू भगवान् दासः

'संस्कृतस्य पठनं सुलभं कर्तुं ये प्रयत्नाः प्रचलंति ते फलिष्यंति इति न मे प्रत्ययः । यदि ते फलित्वा वयं संस्कृतं सुलभं वक्तुं लिखिंतु च शक्ष्यामः तर्हि तदेव भारतस्य भाषा भवेत् इति आशा स्यात् नाम । '

श्री प्रकाशः

'संस्कृतं सरळी-कृत्य लोक-प्रियं निर्मेयं । '

श्री मुन्षी

'संस्कृतं एव राज्य-भाषा भवितुं अर्हति इति निश्चितः मे अभिप्रायः '

श्री पतंजलिशास्त्री

'अद्यतः प्रायः ८०० वर्ष-पूर्वं भारतस्य राष्ट्र भाषा संस्कृतं एव आसीत् । भारतस्य इतर देशनां च पारस्परिकः संबंधः अस्य

आधारे स्थितः । संस्कृते अद्यापि सैव व्यापिका शक्तिः विद्यते । अतः संस्कृतं राष्ट्र-भाषा भवितुं अर्हति। '

**श्री नरेन्द्रदेवः**

संस्कृतस्य भारत-राज्य-भाषात्वं कामयानेषु धीमंतः श्रीमंतः कट्जू, मुन्षी, श्रीप्रकाशः, पट्टाभि सीतारामय्यः, संपूर्णानंदः, नरेंद्रदेवः, पणिक्करः, शुक्लः, रामनः, रामस्वामि अय्यरः, पतंजलिशास्त्री, महाजनः कति कति वा सुगृहीत नामानः अस्मदीयाः संति ।

संति अपि न किंचित् कार्यं भवति । राज्य-रंगे धर्मस्य इव संस्कृतस्य अपि नाम्नः अग्राह्यत्वात् । तिष्ठतु प्राच्य-परिषत्, तिष्ठतु संस्कृतस्य लोक-भाषात्वं । सद्यः संस्कृतस्य जीवितं एव संशये पतति ।

मुगल-राज्ये, आंग्ल-राज्ये च, वर्ष-शतैः धर्म-जीविनः ये सज्जनाः संस्कृतं बहिः-प्राणं इव अरक्षन् तेऽपि कांग्रस-प्रणीते स्वराज्ये संस्कृतं शत्रुं इव त्यजंति । अर्थकरी न इति पूरुषाः । कामकरी न इति स्त्रियः । कष्टं इति बालाः । पुराणं हति युव-जनाः । मृतं एव इति 'डाक्टराः' असन् नायक-वराः एव । संस्कृतं नाम दारिद्यं इति जातं ।

अद्य स्वराज्यस्य षष्ठे वर्षे संस्कृतस्य महा-विदुषः अपि अन्नं नास्ति । वस्त्रं नास्ति । गृहं नास्ति । विवाहः अपि न

भवति । आंग्ली यस्य मुखे सः धनी, सः कुली, सः गुणी, सः पंडितः । शासनं हिंदुस्थानी-प्रचाराय लक्षशः दानं करोति । संस्कृताय न काणीं वराटिकां । देश भाषासु नूतानि पुस्तकानि आह्वयति । अत्र प्रार्थितं अपि संस्कृताय स्थानं न यच्छति ।

कारणं ? नाम्ना भारतीयाः अपि अन्तः वहिः च आंग्लीकृताः संति अस्मत्-शासकाः । यत् आग्लं तत् एषां सत्यं शिवं सुन्दरं :- आंग्ल-भाषा, आंग्ल-वेषः,विद्या, विवाहः, आचारः, व्यवहारः सर्वं अपि । अर्थ-काम-मूलां आंग्लीं मनसा भजंतः एते धर्म-मूलं संस्कृतं नहि मन्यंते ।

स्वतंत्रे भारते बुद्धि-पर तंत्राः इमे कांग्रसीयाः । एते द्विधा वद्धाः । एकतः आंग्ली-मोहेन; अन्यतः कांग्रसस्य पार्षडेन । यत्र पर-भाषा-प्रसंगे अन्य-देशीयाः स्त्रियः अपि लज्जन्ते, तत्र अस्मन्-नायकाः साटोपं विजृंभन्ते । ‘ यथा आंग्ल देशे आंग्लाः, तथा आंग्लाः वयं भारते ’ इति आत्मानं प्रकट-यंति इव ।

केवलं स्वराज्यस्य लाभाय कल्पितः कांग्रस-सङ्घः । नीति-निपुणेन गांधी महाशयेन अस्य द्वारा सत्याग्रहं प्रयुज्य राज्यं प्राप्तं । सत्याग्रहः नाम महा-मंत्रः आसीत् । किंतु मांत्रिकं विना न प्रसरति । अतः एव महाशयः ‘ प्राप्ते स्वराज्ये कांग्रसस्य विसर्जनं’ इति जुघोष ।

प्रत्यक्षं एव खलु, यत् गांधी-महाशयस्य अपगमे कांग्रसः सत्याग्रहात् भ्रष्टः दुराग्रहं एव आपन्नः। देश-धर्मस्य प्रामाण्यं न अभिजानाति। तस्य धर्मस्य उन्मूलनं एव निजं परमं धर्मं प्रकटयति। यूरपस्य अमेरिकायाः च प्राकृतान् उच्छिष्टान् संघ वादान् आलंब्य, सनातनस्य भारत-प्रजा-संघस्य पुनः निर्माणं एव प्रतिपादयति। राज्ये अर्थं कामं एव चिंतयति; तत् च आंग्ल सूत्रैः। अनेन किं फलति? द्वंद्वं सर्वत्र। पितृ-पुत्रयोः द्वंद्वं। पति-पत्न्योः द्वंद्वं। स्वामि-पाल्योः। धनिक-श्रमिकयोः। गुरु-शिष्ययोः अपि। हताः शालिकाः; हताः शौंडिकाः; हताः पन्डिताः; हता भाषा, हताः मध्यमाः (Middle-class people) हताः विद्वद्-अक्रियाः; हता-हतं सर्वं। तथापि गुरु-प्रोक्तं अपि, कांग्रसः आत्मनः विसर्जनं न सहते। विना कांग्रसं 'हतं भारतं' इति च प्रचारयति। अकार्यं इदं।

महाशयस्य आदेशः अमोघः। सर्वथा युक्ति - युक्तः कांग्रसं विसृज्य कांग्रसीयाः प्रजासु मिलिताः लीनाः च भवेयुः।

सत्यं, केचित् इमे पुरुषाः महांतः मान्याः च। किंतु भारतं महत्तरं, सुमहत्तरं च आस्ते। न एकः पंडितः किंतु शतं पंडिताः संस्कृत-हृदयाः राज्ये अद्य स्थातुं अर्हन्ति। न तु पर भाषा-दूषिताः बुद्धि-भेदं आपन्नाः कांग्रसीयाः। उप-सहस्रवर्षैः घोरं दास्यं अनुभूय दैवात् स्वतंत्री-भूतस्य, प्रकृत्या धर्म-मार्गैः एव विकसन

शीलस्य भारतस्य धर्म-भीरवः एते कांग्रसीयाः अधिपतयः भवेयुः इति, 'हंत, विधि रहो बलवान् !'

कांग्रसस्य विजातीया आंग्ला राजनीतिः वृद्ध-भारतस्य कथं युज्येत? सर्व-प्रथमं अस्य भाषा-नीतिः दुष्टात् अपि दुष्टा प्रतीयते । 'कः अयं देशः? कः अस्य धर्मः ? किं अस्य पूर्व चरितं? का च अस्य प्राणभूता भाषा?' इति सहजं सरळं च विचारं दूरतः कृत्वा, भारतं कांग्रसेन एव निर्मितं इव, आदौ बहु जनानां, अर्थात, ३६ कोटि-मध्ये, १२ कोटीनां इति हिंदीं, परं मुस्लिमनां कृते हिंदुस्थानीं, पुनः स्वराज्ये प्राप्ते हिंदीं, सद्यः संस्कृत-पूर्णा हिंदीं इति. न तु संस्कृतं इति, क्वचित् आंग्लीं इति च, एवं एवं वदंतः भारतस्य भाषा-प्राणैः क्रीडंति इव इमे दुरधीताः !

नित्यं व्यवहाराय देश-भाषा इति, राज्य-व्यवहाराय हिंदी इति, लोके व्यवहाराय आंग्ली इति, मोक्ष-लाभाय संस्कृतं इति च यः अस्मत्-शासनस्य भाषा-प्रबंधः सः कर्म-लोके अत्र न संभाव्यः । विद्या नाम भाषा एव न भवति । संस्कृतं प्रति वक्र-भणितं इव इदं ! यतः अनेन न तावत् संस्कृत-वेदिनां यावत् संस्कृतस्य एव संसार-मोक्षः भविष्यति । अलं 'संस्कृतं मोक्षाय' इति उपदेशेन । देशे देशे विद्वांसः संस्कृतं प्रौढां लोक-भाषां कामयंते । स्वदेशेऽपि शासनेन नियुक्तः विद्वत्-संघः

एव संस्कृतं भारतस्य अन्तर-राष्ट्रीय-भाष कामयते । किंतु दलैव्यं गताः कांग्रसीयाः डोलायां रुदंतीं, पदेषु स्खलंती, अलक्षणां अर्भकां इव हिंदीं अभिलषन्ति । अस्तु, पुनः संस्कृत-सहायां इति कः अयं विसंवादः? संनिपाते अल एका चिकित्सा-संस्कृत-सेवनं नाम ।

भाष्यते इति भाषा । विना भाषणं, यथा प्रजानां-पारतंत्र्ये-भाषा अभाषा अर्थात् मृतभाषा एव भवति । यदि एव संस्कृतं भारते जीवेत्, अवश्यं भाष्येत, पंडितैः पामरैः सर्वैः अपि । भाषा वृक्षः इव । प्रजाः मूलं; पुष्पं फलंच पंडिताः । द्वयोः अंतरं एव, न वस्तु-भेदः ।

व्यवहारस्य अभावे संस्कृतं कष्टं इति, क्लिष्टं इति, पुराणं इति, मृतं इति च नाना वदंति । अस्तु; यत् कार्यं तत् कार्यं, कष्टं वा सुखं वा । किंतु लोके कष्टाः भाषाः इति, सुखाः इति च बाल-वचनं इदं । व्यवहारे भाषायाः कष्ट-सुख विचारः एव न भवति । स्तन्येन समं अयत्नं एव अंतः गृह्यते । चित्रं! क्वचित् अव्यवहारेऽपि कष्ट-सुख विचारः न भवति-यथा आंग्लयाः । किं आंग्ली भारते व्यवह्रियते? नहि । तिष्ठति आंग्ली ५,००० क्रेश-दूरे, विजातीया च । तथापि ३६ कोटि संकीर्णं भारतं अपांगेन इव शास्ति । 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं.' इति बालः, वृद्धः, स्त्री, पुमान्, धनिकः, दरिद्रः, पंडितः,

पामरः, आटविकः, पार्वतीयः सर्वः अपि तस्याः पाद-पूजां करोति । किं अस्य रहस्यं? अर्थस्य पुरुषो दासः ! अर्थकरी आंग्ली राज्य-भाषात्वेन दूरात् अपि समाराध्या । अर्थकरं न संस्कृतं; अंकात् अपि निपात्यते । अर्थातुराणां न गुरु र्न बंधुः ।

भोः कांग्रसीयाः, सकृत् त्यागशीलैः युष्माभिः खलु भारतं बंध-मुक्तं । भारतस्य प्राणं संस्कृतं अपि मुक्तं कुरुत-युष्मद्-राज्य-बंधात् । तातस्य कूपं इति क्षारं मा पिबत । त्यजत हिंदीं । जगत्-ज्योतिः संस्कृतं राज्ये स्थापयत। देशे देशे विदुषां बहु मताः भवता। संस्कृतं निरस्य हास्य मार्गं मा भजत। 'पृथग्-जनस्य संस्कृतं कष्टं' इति मिथ्या-वादं मा कुरुत। सः नित्यं व्यवहारे प्रतिशतं सप्तति पदैः संस्कृतं एव भाषते । अद्य आंग्लीं चर्वतः तस्य नूनं मधु-पानं इव संस्कृतं, यतः स्वकीयं । अर्थ-प्रदं संस्कृतं आंग्ली इव कष्टं अपि सुखं, क्लिष्टं अपि सरळं, पुराणं अपि नवं, मृतं अपि जीवितं भवेत् एव ।

श्री श्री प्रकाशः वदति—एवं एव श्री मुन्शी महाशयः – 'देहि मे लघु संस्कृतं । तत् अहं राज्य-भाषां करिष्यामि ।' कः अत्र न्यायः, भोः राज्य पालाः - 'राज्यं करोति हिंदीं; प्रजाः कुर्वंतु संस्कृतं' इति । किं, भाषाः प्रजाभिः चत्वरे संभूय सृज्यंते, उत सर्व शक्तैः राज्यैः? साक्षात् दृश्यते हि कथं दश

शत-वर्षैः ऐरलांडः, विंशति - शत वर्षैः इस्त्रायलः केवलं शासन मात्रेण स्वां स्वां भाषां आप; कथं च दश-वर्षैः, पंच-दश-वर्षैः वा भाषा-द्वयं इदं राज्य-पोषणेन पुनः अद्य जीवति, चलति गायति, नृत्यति च। किं न संस्कृतं? असति व्यवहारे संस्कृतस्य सुलभी-करणं इति मिथ्या प्रसंगः। व्यवहारे एव सर्वं समी-क्रियते। यदि अस्ति भाषा, बालेषु बालभाषा, स्त्रीषु स्त्री-भाषा पंडितेषु पंडित-भाषा, पामरेषु पामर-भाषा इति यत्र यत्र भाषा गच्छति, तत्र तत्र तत् तत् रूपं गृह्णाति। सति कुडये चित्र कर्म!

सुलभं संस्कृतं सुलभं इति दर्शयितुं एव अयं प्रयत्नः। संधि कष्टं, समास-कष्टं इति कष्टद्वयं संस्कृतस्य उच्यते। किंतु बहवः न स्मरंति इव यत् संधिः समासः च न नित्यः किंतु वक्तुः इच्छा-विषयः एव इति। अत्र अपि पुनः आंग्ल-दृष्टिः एव। आंग्ल्यां प्रायः संधिः इति समासः इति नास्ति। पदं सदा व्यस्तं एव दृश्यते। अस्मद्-आंग्ल-शिक्षिताः सौलभ्यं इदं संस्कृते अपि वांछंति। इति एतावत् न्याय्यं एव। वांछया किं? व्यवहारे या कापि भाषा छिन्न - भिन्नं एव प्रचलति। संधिं कृत्वा न हसंति। समासेषु न रुदंति। संस्कृतं अपि तथा भवेत् एव। सहजां इमां भाषा - गतिं विस्मरंतः सौलभ्यं प्रथमं, व्यवहारः परं इति इमे विपरीतं वदंति। इदं एव चिंता-पदं। विदां वेदनं इति क्लेशः। संस्कृतस्य व्यवहारे यावत् सहजः अनुकरण-मार्गः न

संभवति तावत् संधिः उपेक्ष्यः इति अस्मद् विनतिः । यतः अनुकरण-मार्गे कष्ट-सुख विचारः एव न भविष्यति ।

भाषा नाम नदी इव । प्रवाहे सति, बहु-मुखं प्रसरति, क्वचित् उच्चं, क्वचित् नीचं, क्वचित् कष्टं, क्वचित् सुखं । संस्कृतं सर्वतः कष्टं इति भ्रमः एव आंग्लीं भजतां अस्मदीयानां । दश-लकाराः कष्ट इति केचित्; आंग्ल्याः अष्टा-दश लकारान् अगणयंतः । द्वि-वचनं, अवार्य इव, दुःखं इति केचित् । आंग्ल्यां अपि नित्यं एकत्वं, नित्यं बहुत्वं, क्वचित् उभयत्वं, इत्यादिं निरूढिं न स्मरंतः । संधिः कष्टं इति केचित्; आंग्ल्याः असह्यं गुणित-क्लेशं (spelling) विस्मरंतः । एवं विवशाः इमे सर्वं सुखं आंग्ल्यां, सर्वं संसार-कष्टं संस्कृते च पश्यंति ।

आंग्ल्याः सर्व-विधान् क्लेशान् सहंतः संस्कृतात् पदे पदे शंकिताः भवंति इति दृष्टि-दोषः अयं पाठकानां एव, न तु वस्तु - दोषः भाषायाः इति स्पष्टं । विजातीयानां पश्चिमीयानां सत्वया मौनेन च संस्कृतं पठित्वा तत्र प्रामाण्यं अधिगच्छतां, संस्कृतं कष्टं इति येषां भारतीयानां यत् भयं तत् मनोगतः विकार-मात्रः । भेषजं पूर्वं उक्तं संस्कृतस्य अर्थ-करत्वं एव । अर्थ-करत्वं राज्य-भाषात्वेन । राज्य-भाषात्वं शासनस्य स्वीकारेण । स्वीकारः शासकानां संस्कार - बलेन । वैदिकः अयं संस्कारः वैदिक-भाषायाः अर्थात् संस्कृतस्य सम्यक् शिक्षणेन । समग्रं

भारतीय-भाषा-शिक्षणं विना भारत-देशस्य शासकत्वं इति शुष्कं विडंबन। लोक-हास्यं च।

एवं अद्य अपठस्य अपि जनस्य श्रवणे ग्रहणे, च संस्कृतं यथा श्रुति - सुखं, सुलभं च भवेत् तथा पदं अल्पं, व्यस्तं च वाक्यं लघु, सरळ च कर्तुं एव अत्र यत्न:। शैली कचित् आंध्रीं, क्वचित् आंग्लीं च अनुकरोति। मन्ये न इदं संस्कृतस्य अवमानाय। संस्कृतं समुद्र: इव। महा-नदीभि: इव कु-सरिद्भि: अपि पूर्यते।

पद-विषये वक्तव्यं किंचित् अस्ति। संस्कृतं महत्। तथापि काल-वंचितं सत् आंग्लादि भाषाणां प्रकृति-शास्त्र-संपदं न बिभर्ति। यत: शास्त्रं इदं नूत्नं, केवलं द्वि-शत-वर्षीयं। एवं एतत्-संबंधिन: पद-जालस्य लोप: संस्कृते वर्तते। पुन: संस्कृत-पदानि सकलानि देश-भाषासु वा पंडित-व्यवहारे वा न लभ्यंते। कानि-चित् पदानि, संस्कृते अपि मृग्याणि, देश-भाषासु व्यवहारे दृश्यंते। एवं सति अद्य संस्कृतस्य भाषणे लेखने वा पद-ग्रहणं कोशस्य प्रामाण्येन एव भवितुं अर्हति। 'अप्रसिद्धं' इति 'अप्रयुक्तं' इति ईदृशै: संकोचै: न भाव्यं। अन्य-देश्यानां पदानां संस्कृती-करणं यावत् न भवेत् तावत् तानि पदानि यथारूपं प्रातिपदिकत्वेन गृहीतानि भवेयु:। 'चाय:' (Tea) इति अत्र नवम् पदम् देश-व्यवहारात् गृह्यते। 'क्रुश:'(Cross) संस्कृत वैविलात्।

संस्कृते बंधव: पाठका: —— अल्प: अहं जन:। भाषायां य: मे अभिमान: स: एव मे तत्र अधिकार:। न अन्य:,

अधिकः वा। तथापि उडुपेन इव सागरं प्रविष्टः अस्मि। 'न साहस मनारुह्य नरो भद्राणि पश्यति' इति बाल-नीतिं आश्रयामि। संस्कृतस्य यात्रायां अस्यां महतां नौका-साधनानां मध्ये अल्पस्य अपि अस्य उडुपस्य सेवां अनल्पां एव आशासे। तृणेन कार्यं भव तीश्वराणां।

मन्ये स्वराज्यस्य भारः इव संस्कृतस्य भारः अपि आंग्ल-शिक्षितेषु भूयसा तिष्ठति। यतः अद्य संस्कृतं राज्य-रंगं प्रविशति। व्यवहार - भूमिं च अवतरति। व्यवहाराय तु आंग्ल शिक्षिताः एव कल्पंते; न तु पंडिताः। वज्रं वज्रेण भिद्यते। ये आंग्ल-शिक्षिताः संस्कृतस्य मार्गं-निरुंधंति ते आंग्ल-शिक्षितैः एव साध-यितुं शक्यंते। नो चेत् गताः पंडिताः, गतं संस्कृतं, गतं एव च भारतं। अतः आंग्रेषु संस्कृत-प्रियाः आंग्ल-शिक्षिताः सर्वे संस्कृत-प्रचाराय स्थापितस्य **संस्कृत सेवक समाजस्य** सभ्यत्वं सदयं अंगी कुर्वंतु इति पुनः पुनः प्रार्थना। उद्यमे सर्व-विधं साह्यं दातुं च।

सामान्यः अहं जनः। संस्कृतस्य-सेवायां श्री विश्वनाथः शरणं इति प्रस्थितस्य मम पूर्वं शिष्यः, अद्य मित्रं, श्री कर्पूर **रामकृष्णमूर्तिः** B.Com.(Hons.) अत्र मे सहायः तिष्ठति। युवा,विद्वान् , धनी, दाता च अयं संस्कृत-पक्षे स्थितः, उत्तरोत्तरं, संस्कृतस्य, संस्कृत-धर्मस्य च पालने, पोषणे च कृती, कीर्ति-पात्रं च भूयात् इति अनेकाः हृद्याः मे आशिषः। जयतु संस्कृतं।

**इति, संस्कृतसेवकः—को. कृष्णसोमयाजी गुण्टूरु.**

Dear Reader,

Sanskrit is our great inheritance. Our past greatness is all of Sanskrit, its life, literature, art and philosophy. Even today the western nations are seeking inspiration from it. We cannot afford, as we are doing, to lose this grand heritage.

How to preserve Sanskrit, as a living force? It is only by making it our national language. That it is not in use is no matter. The Irish have brought back Gælic, after 1200 years and the Jews, their Hebrew after 1900 years. To day these are state languages and living.

Sanskrit is much easier to bring back. It persists in our life in this or that form and constitutes 70% ofall our regional languages. Today it is a world language, studied and honoured in every civilized country.

To our shame, we are not able to find a place for Sanskrit—in our public life. We are so anglicised that we see nothing good in things Indian, not even in its language. Our leaders, unable to construct, or rather, reconstruct on age-old foundations,are cryingfor a revolution, by which they hope, ultimately, to pattern our law and life on those of Europe and America. It is time we resist this wild revolutionary zeal, utterly unworthy of an ancient people like ourselves.

Sanskrit is India's one language and can alone teach us how to tackle our great problems. So in the best interests of our country's future, as also of its present, it is the duty of us all, high and low, to learn it and learn it in the shortest possible time. For India, without Sanskrit, is India— Benighted.

Learning Sanskrit through the regional language is a suggestion worth examining.

—::—

# कणः लुप्तः गृहं दहति

★

आसीत् पुरा रुषिया-देशे यस्मिन् कस्मिन् ग्रामे इवानः नाम कार्षः। तस्य नवं वयः, सुस्था वृत्तिः, त्रयः पुत्राः च आसन्। ग्रामे कारिषु स्वयं पटोः तस्य सुताः सर्वे अपि क्लवः आसन्। ज्येष्ठः ऊढः; द्वितीयः ऊढ्वै योग्यः; तृतीयः अपि प्रौढः हयान् पाळयति; हलं च किंचित् कलयति। इवानस्य जाया गृहे श्रमिणा शांता च आस्त। एवं इवानस्य, तस्य जनस्य च, सुखे जीवने न कापि बाधा आसीत्।

तेषां गृहे एकः एव अकरः पोष्यः जनः आसीत्। सः इवानस्य पिता एव। वृद्धः सः श्वासेन रुग्णः बहिः सुधानां उद्धानस्य तले कुट्यां सप्तभिः वर्षैः कुश्यति स्म। सर्वं संपन्नं खलु इवानस्य! तस्य त्रयः घोटाः, एकः बालः स-वत्सा धेनुः, पंच-दश मेषाः च आसन्। स्त्रियः न केवलं क्षेत्रे सहायाः किंतु गृहे सर्वं वस्त्रं वदन्ति, यथा क्षेत्रे पुरुषाः कृषन्ति। तेषां गृहे क्षेत्रस्य भव्यात् फलात् ऊर्ध्वं अपि भोग्यं स्वीयं एव धान्यं सदा संचितं आस्ते। करस्य दानाय अन्यस्य अर्थस्य साधनाय च ते कंगून् विपणन्ति। एवं इवानः पुत्राः च सुखं अवत्स्यन् यदि

एव तस्य च पक्षे गृहे घोरकस्य सुतस्य गब्रेलस्य च वैरं न अभविष्यत्।

यावत् वृद्धः घोरकः अजीवत्, इवानस्य पिता च गृह्ये कर्मणि अदक्षत्, कार्षाः ते सामंतानां सदृशं एव अवसन्। अत्र गृहे स्त्रीणां पात्रेण वा चिलकेन वा कार्ये जाते, गोण्या वा पुंसां, अथवा यानस्य चक्रे भग्ने, सद्यः तस्य सत्कारे च अशक्ये, एकेन अन्यस्य गृहं प्रति वचः प्रेषितं। एवं ते सर्वे अपि प्रतिवेशानां अर्हं यथा तथा मिथः साद्यं आचरन्। एकस्य वत्सः अन्यस्य खलं अत्येति। सः द्राव्यते हि। उच्यते च तैः जनैः " वत्सः मा एतु। अत्र अस्मत् धान्यं अस्ति।" तालैः कोष्ठ स्य बंधनं, अन्यस्य वस्तुनः गूहनं, अथवा परोक्षे मिथः दूषणं, एवं-आदि तेषु दिनेषु मनसि अपि तैः न चिंतितं। एवं पितृ-काले। यदा तु पुत्राः गृह-पतयः आसन्, तदा सर्वं व्यस्तं आसीत्। सर्वं इदं अल्पस्य एव हेतोः। इवानस्य स्नुषा कुक्कुटीं एकां पालयति। एषा कल्ये एव ऋतौ अंडानि सूते। सा च तानि अंडानि 'उत्थानं' प्रति चिनुते। दिने दिने सा यान-शालां याति; अंडं च याने विंदति। सकृत् तु प्रायः बालैः तर्जिता सा कुक्कुटी वृतिं उल्लंघ्य प्रतिवेशस्य गृहं अयात्। अंडं च तत्र ससर्ज।

सा योषा तस्याः कलकलं अशृणोत्; किंतु स्वगतं आह:- अद्य न मे क्षणं अस्ति। आदि वा राय सज्जा स्यां। अंडं परे आने

ष्यामि' इति। सायं सा यानं अगात्। अंडं तु न अपश्यत्। श्वश्रू गता; देवरं च गता; अपृच्छत् च यदि तैः अंडं आनीतं। नहि, तैः न आनीतं। तस्याः खुलः देवरः तारसः तु अवदत्, 'तव 'कुक्कुटी अंडं प्रतिवेशस्य गृहे अधात्। तस्याः कलकलः तत्र एव आसीत्। ततः एव सा वृतिं उत्क्रम्य आगात्' इति।

गतं स्त्रिया। कुक्कुटी च दृष्टा। सा तत्र एव अन्यैः पक्षिभिः साकं विटंके आस्त। निद्रां गंत्री इव नेत्रं मीलति। वधुः अपि कुक्कुटीं प्रष्टुं उत्तरं च लब्धुं इच्छति इव।

सा सद्यः गृहं गता। गब्रेलस्य माता च तां मिलितुं बहिः अयात्। •

किं बाले ?

आर्ये, किं अस्ति ? प्रातः मम कुक्कुट्या उड्डीय आगतं। किं तया अंडं अत्र न सूतं ?

न किंचत् दृष्टं तस्याः - देवस्य- कृपया अस्मत कुक्कुट्या एव चिरात् अंडानि दीयंते। वयं अंडानि स्वीयानि एव चिनुमः। परेषां अंडैः, नो नः कार्यं। परेषां वाटेषु च, बाले, अंडानि वयं न चिनुमः

तेन रुष्टा सा योषा। तया किंचित् अत्युक्तं। प्रतिवेशा च वृद्धया सह तां प्रत्यदात्। द्वयं मिथः गालिं अदात्। इवानस्य जाया

जलं हरंती ततः आगत्य कलहे युयुजे। गब्रेलस्य जाया च बहिः उद्दत्य यूनीं तां भूतैः अभूतैः च दोषैः शपितुं आरभत। तेन जातः महान् कलकलः। सर्वाः समं अक्रोशन्। पदे पद-द्वयं उच्चरितुं चेष्टितं-ताभिः। तत् च न श्लीलं।

'त्वं इदं'

'त्वं अदः'

'त्वं चोरा'

'त्वं लट्वा'

'वृद्धं श्वशुरं निरन्नं हंसि'

'कृतं ते सत्वेन 'एवं आदि।

'हंजे, त्वया बिलकं मे नीतं; छिन्नं च दत्तं। येन घटान् वहसि सः नः युगः। ज्योक्, देहि नः युगं।'

सः युगः द्वाभ्यां गृहीतः। क्षिप्तं जलं; हृताः कंबलाः। वृत्तं द्वंद्वं। क्षेत्रात् निवृत्तः गब्रेलः जायां अपक्षत्। इवानः च पुत्रेण सह बहिः निस्सृत्य जन्ये मिलितः।

इवानः बली। सः तं सर्वं वारं अद्राव्यत्। ग्रेलस्य दाढ्याः मुष्टिं एकां अलुंचत्। किंवा जातं इति जनाः तत्र द्रष्टुं आगताः। अति कष्टेन च वैरिणः ते वियुक्ताः आसन्। सर्वं एवं आरब्धं।

वृद्धः कुट्यां स्थितः, आदेः अपि तान् संधिं कर्तुं आदिशति। ते तु तं न गणयंति। सः आह :–

'जाताः, अल्पान् अर्थान् प्रति विवदंतः यूयं साधु न आचरथ। चिंत्यतां नाम। सर्वः अयं अर्थः एकेन अंडेन आरब्धः। बालैः तत् हृतं एव स्यात्। अस्तु। किं तेन? एकस्य अंडस्य कियत् मूल्यं स्यात्? देवः सर्वेभ्यः अलं यच्छति हि। अस्तु, तव प्रतिवेशः परुषं एव किंचित् वक्ति; तत् त्वया सत् खलु कार्यं। त्वया तथा वाच्यं यथा तेन मृदु वक्तुं शक्यते। यत्र कलिः तत्र एवं विधाः अर्थाः जायंते। सर्वे वयं पापाः। सर्वं संधितं कुरु। तेन अर्थस्य अस्य अंतः भवतु। यदि त्वं क्रोधं पुष्यसि तत् तव एव महान् अनर्थः भविष्यति।'

युवानः ते वृद्धं तं न मन्यंते। तस्य वचः वृद्धस्य जल्पं मन्वते। इवानः प्रतिवेशस्य पुरः स्वं न जातु नमयेत्।

"न तस्य दाढी मया कृष्टा। सः तां स्वयं एव चकर्ष। प्रत्युत तस्य पुत्रः मम चोलस्य बन्धान् अच्छिनत्। चोलं अपाटयत् च। पश्य इदं"।

इवानः अपि सभां अगात्। शांति-पालेन, प्रांत-पालेन च सः विचारितः। अर्थस्य अस्य चलतः गब्रेलस्य यान-कीलः न

हष्ट: । गवेलस्य स्त्रिय: इवानस्य पुत्रो तस्य चौर्यं अक्षिपन् । ता: ऊचु: 'रात्रौ असत् जालं अतीत्य यानं प्रति गच्छन्तं तं वयं अपश्याम । कश्चित् प्रतिवेश: अपि गंजा-पालाय कीलं अर्पयंतं तं अपश्यं इति वक्ति ।'

तत: इदं अपि सभां नीतं । एवं गृहे, विना कलिं वादं वा, एकं अपि दिनं न याति । बाला: अपि मिथ: अशपन् । पितॄन अनु । स्त्रियश्च वस्नानि धावितुं यदा नदीं गच्छन्ति तदा तत्र तासां करा: न तावत् पीडनं कुर्वंति यावत कुत्सनं तासां जिह्वा: । दुष्टं च सर्वं वच: ।

आदौ कार्षा: ते मिथ: अपालपन् । परे एकस्य यत् यत् करं आयात् बुध्वा तत् अन्य: हर्तुं आरभत । बाला: च वृद्धानां रीतिं अन्वसरन् । एवं तेषां जीवनं कष्टात् कष्टतरं आसीत् । इवान: सर्वकोव: कुन्ठ: गवेल: च क्रमात् ग्राम-सभां, मंडल-सभां, शांति-पालस्य पुर: गत्वा, मिथ: दूषितौ आस्तां । येन सर्वे विवाका: तेषु श्रांता: आसन् । अद्य गवेलेन इवान: दन्डं वा बन्धं वा प्रापित: । परं इवानेन गवेल: च तावत एव । यथा यथा ते मिथ: अद्विषन् तथा तेषां क्रोध: अपि ऐधत । शुनां इव, ये खलु मिथ: रुन्धंति ! पुन: यथा ते युध्यंते तथा एव ते रूष्टा: भवंति । त्वं एकं पुच्छे प्रहरसि । तेन स: अन्य: एव त्वं दशति इति मत्वा पूर्वात् अपि उग्र:

भवति। एवं एव एते ग्राम्याः। ते सभां गताः। अद्य एकः दंडितः। अथवा बंदी कृतः। परं अन्यः। एवं एवं ते मिथः क्रुद्धाः आसन्। 'किंचित् तिष्ठ रे, फलं अस्य द्रुतं एव नूनं भोक्ष्यसि'। एवं षड्वर्षाः गताः। उच्चैः कुट्यां स्थितः वृद्धः तु वारं वारं वक्ति— "पुत्राः, किं क्रियते? अलं एतेन दानेन प्रति-दानेन च। कर्मणि तिष्ठत। द्रोहं मा चिंययत। एवं वः श्रेयः भविष्यति। यथा तु दह्यते तथा क्लेशः एव भुज्यते।

किंतु ते तं न अगणयन्। सप्तमे वर्षे यत्र कुत्र विवाहे इवानस्य स्नुषया क्रीडितः गबेलः। तया सः यदा कदा हयस्य हरणे निग्रहेण आक्षिप्तः। मत्तः गबेलः कोपं सोढुं अशक्तः तां तथा प्राहरत यथा सा वारं यावत् मंच-गता आसीत। तदा सा गुर्वी च आस्त।

इवानः मुदितः—दंडपालं च गतः-कथयितुं।

'अद्य खलु प्रतिवेशात् अस्मात् अहं मुक्तः भविष्यामि। सः नूनं बन्धं आप्स्यति; सैबीरियायां निर्वासं वा।'

किंतु इवानस्य इच्छा न पूरिता। दंडपालेन दोषणं निरस्तं। स्त्री पृष्टा। किंतु तदा सा स्थातुं चलितुं च शक्ता इति, घातस्य चिह्नं किंचित् नासीत इति च स्थापितं। ततः इवानः शांति-पालं अगात्। सः तु अर्थं एनं मंडल-सभां प्रापयत्। इवानः जागर्ति। मन्डल-सभायाः किरकं ज्येष्ठं च

मधु-भांडेन सम्प्रीय गवेलाय कशां अदापयत्। दन्डः लेखकेन गवेलाय वाचितः- 'सभा इयं शास्ति यत् गवेलः गार्डेयः मन्डल सभायां सिवि-वेत्रेण विंशति घातान् ग्रहीष्यति' इति।

इवानः अपि दन्डं वाचितं श्रुत्वा ऐक्षत, कथं सः तेन गृहीतः भवेत् इति। गबेलः पन्जिवत् पांडुः आसीत्। विवृत्य च बरन्डं अयात्। निंज हयं द्रष्टुं इव इवानः तं अनु-गतः। अज्ञातः एव सः इत्थं वदन्तं गबेलं अशृणोत् :- 'हंत; सः मां पृष्ठे धातयिष्यति, तेन पृष्ठं मे धक्ष्यति। अस्तु; तस्य किंचित् अस्मात् अपि गुरुतरं एव दहेत् नाम।

इदं वचः श्रुत्वा इवानः सद्यः सभां गतः। अकथयत् च, "न्याय-पालाः, गबेलः मां गृह-दाहेन तर्जति। श्रूयतां, साक्षिणः पुरः एव सः आह"। गबेलः प्रत्याहूतः। 'किं इदं सत्यं यत् त्वया एवं उक्तं'?

'न मया किंचित् उक्तं। कशां देहि; यतः भवान् अधिकृतः अस्ति। दृश्यते, अहं एव अत्र दंड्यः; यतः अहं ऋजुः अस्मि। सः तु स्वैरं कर्तुं अर्हति।'

गवेलः पुनः यत् किंचित् वक्तुं ऐच्छत्। किंतु तस्य ओष्ठौ गंडौ च द्वयं कम्पितं। सः च कुडय्यं प्रति

विवृत्तः। स्थानिकाः ते अपि तस्य दृशा भीताः आसन्। "स्वस्य वा प्रतिवेशस्य वा कां अपि हानिं अयं कुर्यात् एव" इति ते अचिंतयन्।

वृद्धः विवाकः आह :— "रे जनाः, अत्र पश्यत। वरं वः न्याय्यं वर्तनं, सांत्वनं च। अयि गवेल, किं तत् न्याय्यं यत् त्वं गुर्वीं तां तथा प्राहरः? दिष्ट्या तत् तथा साधु जातं; किंतु चिंतय किं किं भूतं स्यात्। किं तत् न्याय्यं? वरं त्वं निजं दोषं विवृत्य इवानं क्षमां याचेः। सः नूनं त्वां क्षमां दास्यति। वयं च दंडं भिद्मः।" वचः इदं श्रुत्वा किरकः व्याख्यात् '२२६ सूत्रं अनु इदं न भाव्यं। वादिभिः न संधितं इति एव सभया निर्णयः कृतः। सः च निर्वाह्यः'।

विवाकः तं न मेने। 'वयस्य, जिह्वा ते भजतु मौनं। न्यायेषु प्रथमः ईश्वरस्य आज्ञायाः पालनं। सः शांत्या प्रीयते'। विवाकः ग्राम्यान् तान् बोधयितुं प्रवृत्तः। किंतु कृती न आसीत्। गवेलः तं न शृणोति।

सः ऊचे :— "भाविनि वर्षे अहं पंचाशत् वयाः भविष्यामि। मम ऊढः पुत्रः अस्ति। जन्मनि न जातु मया कशः भुक्तः। अद्य जदुलः इवानः मां कश्यं करोति। तं गत्वा किं अहं क्षमां याचेयं? नहि, नहि। अलं सोढ्वा। इवानस्य मां स्मर्तुं हेतुः भवेत् एव।"

गवेलस्य स्वरः चकंपे। सः परं किंचित् अपि वक्तुं न अशकत्। विवृत्त्य बहिः अगात्।

सभातः ग्रामः चतुः –क्रोशेषु आसीत्। इवानस्य, गृहं गतस्य, चिरं जातं। हयं वीत–सज्जं कृत्वा, तं गोष्ठे नक्तं बध्वा शालां प्राविशत्। तत्र कोपि न आसीत्। तदा एव स्त्रियः पशून् गृहं निवर्तयितुं गताः। युव-जनाः अपि क्षेत्रात् न निवृत्ताः। इवानः अंतः गत्वा तत्र आस्त। अचिंतयत् च, कथं गवेलः विवाकस्य दंडं अशृणोत्; कथं तेन सः विकलः आसीत्; कथं च सः कुडचं विवृत्तः। इवानस्य मनः गुरु जातं।

'यदि स्वयं अहं दन्डितः,किं मया भावितं स्यात्'? गवेलं प्रति सः स्वार्द्रः च आसीत्। तदैव सः स्तूपे कासमानं पितरं अशृणोत्। पादौ प्रसार्य अधः सर्पंतं च तं अपश्यत्।

वृद्धः च मन्दं मन्दं तत्र पीठं उपसृत्य आस्त। अनेन एव श्रमेण भृशं क्लांतः सः चिरं कासित्वा कंठं च विशोध्य फलकं आश्रित्य ऊचे, 'हंत, किं सः जितः?'

'आम, वेत्रेण विंशति-घातैः सह' इवानः प्रत्याह। वृद्धः शिरः-कंपं चकार।

सः आह, 'अनर्थः अयं इवान, अघं आचरसि।' अत्याहितं खलु। न तावत् तस्य यावत् तव एव। बाढं, तस्य कशा भविष्यति। किंतु तेन ते किं फलिष्यति?

"न पुनः करिष्यति", आह श्वानः।

"किं तत् यत् सः न पुनः करिष्यति? त्वया कृतात् दुष्टं किं तेन कृतं अस्ति?

'किं वा? स्मर्यतां, का मे हानिः कृता तेन। स्नुषा मे तेन - हतप्राया। इदा पुनः नः सर्वान् दग्धुं उत्थितः। किं अस्मै तस्य धनं दद्यां?

वृद्धः निश्वस्य आह :– 'श्वान, त्वं लोके बहुल चरसिः यावत् अहं वर्षैः अपि चुल्यां स्थितः अस्मि। तेन त्वं मन्यसे यत् त्वं सर्वं वेत्सि; न किंचित् अहं वेद्मि इति। हंत वत्स, अपश्यन् त्वं एव। द्वेषः त्वां अंधयति। परेषां दोषाः तव पुरः संति; स्वीये तु पृष्ठे।

तेन दुष्टं चरितं इति वा? का इयं उक्तिः? यदि सः एकः एव दोषी, का नाम वैरस्य भूमिः? किं लोके एकेन वैरं कर्तुं शक्यते, वैरं सदा द्वयस्य एव। त्वं तस्य दोषं पश्यसि। स्वस्य तु न पश्यसि। यदि सः दुष्टः, त्वंतु साधुः, वैरं न स्यात्एव? तस्य दाढ्याः कैश्यं केन कृष्टं? तस्य कक्ष रसिः केन नासितः तं सभां चकर्ष कः? तथापि त्वं सर्वं तस्य उपरि क्षिपसि। त्वं स्वयं दुष्टं चरसि; अत्र अस्ति दोषः। न अयं मार्गः यः मया त्वां बोधितः। किं अयं अस्ति मार्गः एन मया च वृद्धेन गवेलस्य पित्रा च गतं? वयं कथं आस? यथा हि प्रतिवेशाः स्युः।

यदि तस्य सक्तुः क्षीणः, कयापि स्त्रिया आगत्य, ' माम, सक्तुः कार्यः ' इति उच्यते ।

उच्यते च मया ' जाते, कोष्ठं गच्छ । यत् कार्यं तत् नय ।'

यदि तस्य हयान् चारयितुं कोऽपि न आसीत् अहं अवदं :– ' गच्छ रे इवान । हयान् चारय ' इति ।

यदि मे किंचित् कार्यं, अहं तं अयाम् ।

' माम गर्डे इदं इदं मे कार्यं ' ।

' हर माम' एवं आसीत् असन्- मध्ये; एवं सुखं यातः अस्मत् कालः । अद्य अहो! परेद्यवि कोवा सैन्यः प्लेव्ना- युद्धं प्रति अस्मान् कथयति स्म । किं तेन? प्लेव्नातः घोरं युद्धं युष्मन् मध्ये चलति । किं इदं अस्ति जीवनं ? किं, अरे, पापं इदं ?

त्वं ज्येष्ठः गृहपालः च । त्वं असि प्रतिवाक्यः । शिशून् स्त्रियः च किं सिक्षयसि ? रटनं मुटनं च ! किं, परेद्यवि तव तारसः, सः डिंभः, प्रतिवेशां इरीनां गालिं अदात् । तस्य माता शृण्वन्ती हसंती च आसीत् । किं इदं युक्तं ? त्वं असि प्रति-वाक्यः । आत्मनि चिंतय । किं सर्वं इदं भाव्यं? एकं वचः मयि क्षिपसि; द्वयं, अहं क्षिपामि । एकं घातं दास्यसि; द्वयं अहं दास्यामि । न हि, जात, ख्रिष्टः, यदा सः भूमिं च चार, मूढान्

अस्मान् न एवं उपादिशत् । महत् भिन्नं एव उपादिशत् । 'कस्मात् अपि रूक्षं वचः लब्ध्वा मौनं भज । तस्य एव आत्मा तं पिंचति ।' इत्थं शशास नः प्रभुः :– 'यदि इतः पेटं पद्यसे, ततः गल्लं वर्तय । ' अत्र देहि, यदि मां पात्रं मन्यसे ।' तस्य एव आत्मा तं पिंचति । सः द्रवति; त्वां शृणोति च ।'

'अयं अस्ति मार्गः यः तेन प्रोक्तः; 'मा कुरु गर्वं' इति । न भाष्यते किं? किं न तथा अस्ति यथा अहं वच्मि?'

इवानः तूष्णीं आस्त–श्रोता ।

वृद्धः क्षौति । महता कष्टेन कंठ विमुच्य पुनः आरभते :- किं खिष्टेन प्रोक्तं दोषं मन्यसे? नहि, नहि, तत् सर्वं अस्मत् क्षेमाय एव । तव जीव - यात्रां किंचित् विमृश, यदि अद्य ते सुखं अस्ति उत दुःखं, यतः युष्मन्-मध्ये कलिः अयं प्रवृत्तः कल्यतां तावत् यत् त्वया अर्थे अस्मिन् व्ययितं, यत् पुरः पश्चात् इदं रोहणं, यत् च त्वया अन्नाय दत्तं । कियत् अपि दक्षाः जाताः ते सुताः । सुखं जीवेः ; सुखं वसेः । अद्य क्षीयते हि ते वृत्तिः । कुतः ? सर्वं अस्मात् मौर्ख्यात् एव । मानात् एव । पुत्रैः सह कृषन् स्याः । स्वयं च वापं कुर्याः । किंतु भूतं इदं त्वां विवाकं हरति ; अथवा यं कंचित् करण - पाशं, अन्यं, अन्यं वा । कृषिः काले न क्रियते ; वापः वा । माता

भूमिः च कामं न फलति। ऐषमः कंगुः कथं नष्टः? कदा तं त्वं अवपः? पुरात् त्वया कदा निवृत्तं? सर्वं अयं ते भुज-भारः एव। अयि वत्स, निजं कार्यं चिंतय। पुत्रैः सह क्षेत्रे कर्म कुरु। गृहे च। यदि कोऽ-पि त्वां रोषयति, तं क्षमस्व, यत् एव ईश्वरः त्वां कर्तुं इच्छति। तेन सुखं जीवेः; चित्तं च ते सदा लघु भवेत्।" इवानः तूष्णीं आस्त।

"इवान, मे जात, वृद्धं पितरं शृणु। याहि। घोटीं सज्जां कुरु। सद्यः सभां गच्छ। सर्वं अर्थं एनं अंतं नय। प्रातः गच्छ; ईश्वरस्य प्रीत्यै गबेलेन संधिं कुरु। श्वः महसे — इदं आसीत् धन्य-मेर्याः जन्म-दिनं-तं तव गृहं आह्वय। चायं सज्जं कुरु। मधुलस्य कूपीं एकां आनय। दुष्टं पणं एनं अंतं नय; यथा सः भव्ये किंचित् अपि न शिष्येत। स्त्रियः शिशून् च तथा कर्तुं दिश"।

इवानः निश्वस्य एवं चिचिंतः- 'यत् अयं वदति, सत्यं'। अनेन तस्य मनः च लघु जातं। अर्थं संधातुं किं द्वारं इति इदं एव सः न विवेद। अत्र वृद्धः पुनः प्रवृत्तः; इवानस्य चित्ते स्थितं अहित् इव। "गच्छ, इवान, कालं मा क्षिप। यावत् न सर्पति अग्निः तावत् एव तं शमय। न चेत् कृतं अपि अति-चिरं भवेत्"।

वृद्धः पुनः वक्तुं याति इव। किंतु तावत् एव स्त्रियः अंतः विविशुः, कीराः इव स-कलकलाः। गबेलः कशेन दंड्यः

इति, तेन गृहं दग्धुं तर्जितं इति च वार्ता ताः पूर्वं एव प्राप्ता। तत् सर्वं श्रुत्वा, तेन किंचित् किंचित् निजं अपि संयोज्य शादे पुनः गबेलस्य स्त्रीभिः सह ताः जन्यं चक्रुः। गबेलस्य जाया नवेन अक्ष्णेण अतजर्त् इति, गबेलः दंड-पालस्य कर्णे आसाद्य वृत्तं सर्वं व्यस्तं कुर्यात् इति, ग्राम-करणः इवानं प्रति-इदा तु स्वयं राज्ञे एव-नूत्नं अर्थं लिखति इति, अत्र अर्थे यान-कीलं प्रति। शाक-वाटं प्रति, येन येन च इवानस्य गृहं, धनं, सर्वं आत्म-सात् भवेत्, तत् सर्वं अत्र अस्ति इति च ताः वक्तुं आरभंत। इवानः तासां ऊक्तं सर्वं शुश्राव; येन तस्य हृदयं स्तब्धं जातं इव। सः च गबेलेन संधौ संकल्पं एव तत्याज।

क्षेत्र-पदे क्षेत्र-पालस्य कार्य-भरः सदा विद्यते एव। इवानः स्त्रीभिः सह वक्तुं अपि न तस्थौ। किंतु खलं प्रति, कोष्ठं प्रति च अगात्। यावत् सः तत्र मार्जं चक्रे, तावत् सूर्यः अस्तं गतः युव-जनाः च क्षेत्रात् निवृत्ताः। ते तत्र शरत्-सस्यं प्रति हय-द्वयेन हलंति स्म। इवानः तान् प्राप्तः; कृतं कर्म प्रति च तान् अपृच्छत्। सर्वं वस्तु स्थाने कर्तुं तेषां साह्यं अदात्। दीर्णां हयस्य कंठीं एकां, 'सत्-कार्या इयं' इति तत्र पृथक् अधात्। कोष्ठस्य अधः कति-चन शंकून् न्यसितुं अयात्। किंतु तमः पतितं इति, तान् तत्र एव त्यक्तुं मतिं चकार। ततः

पशुभ्य: ग्रासं अदात् । द्वारं च विवृत्य, हयान्, येषां रात्रौ चारणं तारसस्य कृत्यं आसीत् – बहि: विसृज्य, द्वारं पुन: संहत्य, अर्गळं अदात् । " इदा नक्तं-आशं कृत्वा निद्रां एष्यामि' इति मत्वा, हयस्य कंठीं गृहीत्वा स: शालां विवेश । तेन कालेन स: गवेलं, वृद्धस्य पितु: वाक्यं च व्यस्मरत् । यदा च वरंडं निविष्ट: स: द्वारस्य कर्णं अग्रहीत्, पारे वृते: यत्-किंचित् कटु-स्वरेण शपंतं प्रतिवेशं अशृणोत् :-
' दैत्य: अयं कस्मै श्रेयसे भवेत्?' गवेल: वदति स्म । 'हंतुं एव अयं योग्य: ' ।

. एतै: वाक्यै: प्रतिवेशं प्रति इवानस्य पूर्व: द्वेष: सर्व: अपि जागरित: । गवेलस्य एवं चर्चत: , इवान: तूष्णीं श्रोता अस्थात् । यदा स: विरराम, एष: शालां प्राविशत् ।

अंत: दीप: अभात् । इवानस्य स्नुषा कृणंती आस्त । जाया च सायं - अन्नं पचति स्म । ज्येष्ठ: सुत: पाद्यो: कृते वल्क - शल्कान् तनोति स्म । द्वितीय: पुस्तकं गृहीत्वा फलकस्य पार्श्वे उपविष्ट: । तारस: रात्रौ हयानां चारणाय बहि: गंतुं सज्ज: भवति स्म । शालायां सर्वं भव्यं भासुरं च अभविष्यत् यदि एव हंता स: दुष्ट: प्रतिवेश: न अभविष्यत् ।

इवान: शालां प्रविष्ट:, क्लिष्ट: रुष्ट: च । आसात् विडालं अध: अक्षिपत् । जल-पात्रं ' अस्थाने किं? ' इति स्त्रिय:

आक्षिपत्। सः भग्नः इव। काक्षेण कंठीं बध्नन् आस्त। गवेलस्य वचांसि तस्य कर्णे रणंति स्मः- सभायां तस्य तर्जः, 'हंतुं एव अयं योग्यः, इति यं कं प्रति कटु-भाषणं च।

तारसस्य जाया तस्मै नक्तं-आशं अदात्। तं भुक्त्वा तारसः पुराणं मेष-चर्म प्रावृत्य धव्याच कटिं बध्वा रोटीं किंचित् आदाय हयान् प्रति बहिः अयात्। ज्येष्ठः भ्राता तं प्रेषयितुं गतः। किंतु इवानः स्वयं उत्थाय पिंडं प्राप्तः। बहिः व्याप्तं अंध तमः। संगताः मेघाः। उत्थितः वायुः। इवानः द्वारात् अवतीर्य, पुत्रं हयं आरोप्य, बालं च तस्य पृष्ठे प्रस्थाप्य यत किंचित् शृणोति स्म, यावत् तारसः ग्रामात् निर्गत्य निजैः घोटैः सह अन्यान् यूनः मिलितः।

इवानः तत्र तस्थे, यावत् ते सर्वे श्रुति-पथं अतीत्य गताः। द्वारे स्थितस्य तस्य 'पश्य, यदि तव किंचित् गुरुतरं न दहेत्' इति गवेलस्य वचः शिरसः अपास्तुं शक्यं नासीत्। 'चंडः, साहसी च खलु एषः', मेने इवानः। "सर्वं शुष्कं अस्ति। वायुः अपि उत्थितः। पुच्छतः कुतः अपि एष्यति। यत्र कुत्र अग्निं दास्यति। अपैष्यति च। शालां दग्ध्वा, जाल्मः अक्षतः एव नंक्ष्यति। यदि एव मया तत्र कर्मणि गृहीतः स्यात्! तदा खलु न अपेयात्।"

चिंता इयं तस्य मनसि तथा लग्ना यथा सः द्वारस्य पर्व अपि न उद्गतः। वीथीं प्रविष्टः तस्याः उपांतं एव परिययौ। 'शालां परि-चरामि। सः किं करिष्यति वा? केन वक्तुं शक्यते?' इवानः लघुभिः पदैः द्वारात् निर्ययौ। यावत् सः तत्र कोणं प्राप्तः, तावत् वृतिं अनु पश्यन् प्रति-कोणे हठात् चलितं किंचित् अपश्यत्। कोऽपि जनः निर्गत्य पुनः अदर्शनं गतः इव। इवानः विरम्य तस्थौ, जोषं पश्यन्, शृण्वन् च। शांतं सर्वं, हित्वा तु नड्वलस्य पत्राणां गल-गलं पटस्य तृणानां मर्मरं च। आदौ तस्य अंधं तमः प्रतीतं। किंतु, यथा तमसि युक्ते तस्य नेत्रे, सः दूरं कोणं, तत्र स्थितं हलं, पर्णानि च द्रष्टुं अशकत्। सः क्षणं ऐक्षत। किंतु न कंचित् अपश्यत्।

'मन्ये अयं मे भ्रमः। तथापि परितः चरामि।' इति सः कोष्ठं अनुसृत्य निभृतं अगात्। वल्क-पादैः सः तथा मृदु पदं अधात् यथा तस्य हतिं अपि स्वयं न अशृणोत्। यावत् च सः कोष्ठस्य दूरं कोणं आप, तत्र हलस्य पार्श्वे क्षणं यत् किंचित् दीप्तं इव आसीत। सद्यः नष्टं च। इवानः हृदि विद्धः इव। स्तब्धः च। स्तब्धो न वा, तत्र एव देशे यत् किंचित् पूर्वात् अपि तीव्रं जज्वाल। ज्वाले च शिरसि खोलं धृत्वा स्वस्य पुरः एव सपंतं, करे धृतं तृण-पुंजं दीपयंतं च जनं एकं सः अपश्यत। अन्तः इवानस्य हृदयं पक्षी इव चकंपे। प्राणान् निगृह्य, विना

इव अधः पाद-स्पर्शं, उरु-क्रमैः सः तं प्राप्तः । 'हुं', मेने इवानः, 'इदा न अयं नश्येत् । कर्मणि गृहीतः स्यात् ।,

इवानः किंचित् दूरं एव आसीत् यदा सः पुरः पुनः हठात् दीप्तं तेजः अपश्यत् । न तु पूर्व-स्थले, न वा स्तम्भं कीलं । पटं वलिकं प्रति समिद्धं : कीलाः च पटं आरोहन् । तेषां अधः स्थितं गवेलस्य पूर्णं रूपं स्पष्टं दृश्यं आसीत् ।

चापं निपतन् श्येनः इव इवानः कुठं गवेलं दुद्राव । 'इदा खलु एनं गृह्णीयां; मा नाम अयं नश्येत् ,' मेने इवानः । किंतु गवेलः, येन प्रायः श्रुतं एव तस्य पदं-कथं इति न विद्मः-परिधाय, शशः इव कोष्ठात् परं अपारसत् । तं अनु-पतन् इवानः, 'न त्वं नश्येः' इति चुक्रोश । यावत् च सः गवेलं ग्रसितुं गतः, तावत् एव सः पादेन स्रस्तः । किंतु गवेलस्य कंचुकस्य पालिं ग्रहीतुं अशकत् । सा किल छिन्ना; इवानः च अधः गतः । पादौ प्रतिपद्य,'चोराः,चोराः, गृह्णीत गृह्णीत; हत्या,हत्या,पात, पात' इति क्रोशन् पुनः तं ललंघ । किंतु अंतरे अस्मिन् गवेलः निजं द्वारं गतः । तत्र एव प्राप्तः इवानः तं तत्र पुनः लंघितुं उद्यतः, यदा, कर्णे शिलया इव येन केन वस्तुना सः ताडितः । तेन सः स्तब्धः, बधिरितः च । सः गवेलः एव, दः द्वारं प्रति स्थितं साल-खण्डं गृहीत्वा बलपूर्वं तं प्राहरत् ।

स्तब्धः श्वानः। तस्य अक्ष्णोः पुरः कणाः उदपतन्। ततः सर्वं तमः जातं। सः बभ्राम। यदा सः संज्ञां अलभत, तदा तेन गवेलः तत्र न दृष्टः। भातं दिनं इव। तस्य कुटी-दिशः, चलतः यंत्रस्य इव, यत् किंचित् रटितं स्फुटितं च श्रुतं। श्वानः परिवृत्य सर्वतः ज्वलंतीं स्वस्य पश्च-कुटीं अपश्यत्। पार्श्व-कुटी च अग्नि-सात् जाता। कीलाः, धूमः, ज्वलंतः तृणस्य खंडाः च शालां आपतन्।

" किं इदं वयस्याः!" बाहू उन्नीय, ऊरू च ताडयन् श्वानः चुक्रोश। " कथं इदं? वलिकस्य अधः तस्य अग्नेः कर्षणं मर्दनं च इति इदं एव आसीत् मे कार्यं। किं इदं वयस्याः' श्वानः पठति स्म। सः क्रंदितुं ऐच्छत्। किंतु श्वासः रुद्धः; गतः च कंठः। धावितुं ऐच्छत्। किंतु पद-द्वयं न अचलत्; मिथः लग्नं च आसीत्। सः मदं चलितः। पुनः स्खलितः। श्वासं लब्धुं इव सः तत्र तूष्णीं आस। ततः ययौ। अग्निं प्राप्तुं यावत् अयं पृष्ठ-कुटीं पर्यगात्, तावत् पक्ष-कुटी सर्वतः दीप्ता आसीत्। शाला-कोणः, छन्नं द्वारं च समं दीप्तं। कीलाः कुड्याः बहिः उदीयुः। वाटीं गंतुं शक्यं न आसीत्। महान् संघः जातः। किंतु न किंचित् कर्तुं अशकत्।

प्रतिवेशाः निजं वस्तु-जातं शालाभ्यः बहिः प्राक्षिपन्। पशून् च कोटेभ्यः दूरं अचालयन्। श्वानस्य गृहात् परं

गवेलस्य अपि दीप्तं। ततः उत्थिते वायौ, कीलाः वीथ्या धारं व्याप्ताः; ग्रामस्य च अर्धं दग्धं।

इवानस्य गृहे तस्य पिता कष्टेन रक्षितः। कुटुंबिन च यथा स्थिताः निर्ययुः। रात्रौ शादं नीतान्- हयान् अंतरा सर्वं ध्वस्तं। सर्वे पशवः, पालिकासु पक्षिणः, यानानि, सीराः, दंतिकाः, वस्त्रैः सह स्त्रीणां पेटाः, कोष्ठेषु धान्यं सर्वं दग्धं आसीत्। गवेलस्य गृहे पशवः बहिः द्राविताः। यानि कानि च वस्तूनि गृहात् आकृष्य रक्षितानि।

अग्निः रात्रिं यावत् चचाल। इवानः गृहस्य पुरः स्थित्वा अपठत्, 'किं इदं वयस्याः? यदि एव तत् मया कृष्टं मृदितं च!' किंतु पतिते पटले इवानः दीप्तं भागं प्रविश्य दग्धां एकां तुलां गृहीत्वा, बहिः कष्टुं अयसत्। तं दृष्ट्वा स्त्रियः 'मा, मा; एहि, एहि', इति अक्रोशन्। किंतु तुलां एकां आकृष्य, अन्यां आहर्तुं गतः। पादेन च स्रस्तः सः ज्वालासु पपात। तदा तस्य पुत्रः तं अनुविश्य बहिः चकर्ष। इवानस्य केशाः दाढिका च किंचित् दग्धा। वस्त्रं दग्धं। कर-युगं च दग्धं। किंतु सः तत् न जज्ञे। "दुःखेन स्तब्धः अयं" इति जनाः ऊचुः। अग्निः कुटीः निर्दहति। इवानः तु पठन् आसीत्, 'वयस्याः! किं इदं? यदि एव येन केन तत् कृष्टं आसीत्।' प्रातः ग्रामिकस्य सुतः इवानं नेतुं आयात्।

'तात, इवान, पिता ते म्रियते। त्वां आप्रष्टुं इच्छति। तव कृते मां प्रेषयति।''

इवानः पितरं न स्मरति। यत् च तेन उक्तं, तत् अपि न वेत्ति। 'किं पिता? कस्मै प्रेष्यति?' सः आह।

'त्वां आप्रष्टुं इच्छति। तव कृते च मां प्रेषयति। सः अस्मत् कुट्यां म्रियते। एहि, एहि, तात इवान' इति उचे ग्रामिकस्य सुतः। भुजेन च सः तं चकर्ष। इवानः च तं अनु-ययौ। कुट्याः बहिः नीय-मानस्य तस्य उपरि किंचित् दीप्तं तृणं अपतत्। तेन सः दग्धः। ग्रामस्य पराक् भागे ग्रामिकस्य शालां नीतः च यत्र अग्निः न व्याप्तः। इवानः पितरं उपगतः। तत्र कुट्यां ग्रामिकस्य जाया एकला आसीत्। केचित् बालाः उद्धानस्य तले आसन्। अन्ये सर्वे अपि अग्निं एव उप-स्थिताः। सः वृद्धः फलके शयितः। करे घृत-वर्तिः सः द्वारं प्रति नेत्रे वर्तयन् आसीत्। प्राप्ते च पुत्रे, सः किंचित् चलितः। वृद्धा सा तं उपेत्य, 'सूनुः आगतः' इति ऊचे। सः च तं पार्श्वे आनीतं ऐच्छत्। इवानः पार्श्वं गतः।

'किं मया उक्तं, इवान?' वृद्धः वक्तुं प्रवृत्तः; 'ग्रामः केन दग्धः?'

'तात, तेन एव। सः मया कर्मणि गृहीतः। पटे उल्कां न्यस्यंतं तं अहं स्वयं अपश्यं। किंतु दीप्तं कक्षं अप-क्रष्टुं न अशकं; न वा तं मृदितुं। तेन न किंचित् उद्भूतं स्यात्'।

वृद्धः आह:– "इवान, अहं म्रिये। क्रमात्, त्वया अपि मृत्युः अभिगम्यः। कस्य इदं पापं?

इवानः तूष्णीं पितरं ऐक्षत। एकं पदं अपि वक्तुं न अक्षमत।

'ईश्वरस्य मुखं दृष्ट्वा अद्य वद, कस्य इदं पापं? किं मया उक्तं?

तदा खलु इवानः संज्ञां आप; सर्वं विवेद च। सः उच्छ्वस्य आह:– 'हे पितः, पापं मम।' पितुः पुरः जानुपातं निपत्य पुनः आह:– 'पितः, क्षमस्व मां। तव अग्रे, दैवस्य च, अहं दोषी।'

सः वृद्धः हस्तौ विमुच्य वर्तिं च दक्षात् वामं करं परिवर्त्य, 'क्रुशेन' अंगस्य न्यासाय दक्षं करं उन्नेतुं ययास। किंतु अशक्तः व्यरमत। 'जय देव, जय देव', सः आह; पुनः पुत्रं प्रति नेत्रे अवर्तयत् च।

'इवान, वच्मि; इवान।'

'किं पितः?'

"किं इदा त्वया कार्यं?"

इवानः रोदितिस्म। "पितः, न जाने कथं वय अद्य जीवेम," सः आह। सः वृद्धः नेत्रे निमील्य प्राणान् धर्तुं इव ओष्ठौ अचालयत्। नेत्रे च पुनः उन्मील्य, आह; 'शक्येः' यदि

एव दैव–दिष्टं करोषि; क्षम्येः' । किंचित् विरम्य स्मित्वा च सः आह :- 'इवान, मनः कुरु । अग्निः कः अदात् इति कं अपि मा वद । अन्यस्य पापं गूह । ईश्वरः ते द्वयं क्षमेत ।'' अथ वर्ति कर-द्वये धृत्वा करौ च वक्षसि निबध्य, निश्वस्य, गात्रं विसार्य सः वृद्धः विरराम ।

इवानः गबेलं प्रति न किंचित् अवदत् । न कोऽपि वव्रे कः अग्निं अदात् । गबेलं प्रति इवानस्य क्रोधः गतः । गबेलः च विस्मितः यत् इवानः कं अपि कथां तां न शशंस । आदौ गबेलः बिभाय; किंतु अचिरं एव तत्-शीलः जातः । ते जनाः सर्वे अपि कलहं मुमुचुः । तान् अनु तेषां कुटुंबिनः च । शालानां पुनः निर्माणे कुटुंब-द्वयं अपि एक-गृहे एव अवसत् । ग्रामस्य पुनः निर्माणे च – यदा ते दूरं गताः भवेयुः –इवानः गबेलः च पक्षे, पक्षे घरं बबंध । यथा-पूर्वं च प्रतिवेशाः आसन् ।

ते अवसन् यथा-संतः प्रतिवेशाः वसेयुः । इवानः सर्वे कोवः 'ईश्वरस्य आज्ञा कार्या' इति पितुः वाक्यं नित्यं सस्मार । 'आदौ कणे शाम्यः अग्निः' इति च ! इदातु यदि एकेन अन्यस्य कापि हानिः भवेत्, सः यतते, न प्रति-कर्तुं, किंतु अर्थं तं स धातुं एव । यदि एकः दुष्टं वचः वदेत्, अन्यः तत् प्रति तस्य अवरं न वक्ति । किंतु दुष्टात् वचसः तस्य निवर्तनं उप-दिशति । स्वाः स्त्रियः शिशून् च तथा एव शिक्षयति । एवं इवानः पुनः स्वस्य पादयोः तिष्ठति । पूर्वात् अपि अद्य सुख-तरं एव जीवति ।

# विवरणं

★

पृष्ठं १

आसीत् = there was. पुरा = once upon a time. कार्षि:=farmer. नवं वय: = prime of youth. सुस्था वृत्ति: = settled profession. कारिषु= among work men. कुशल: = good work-men. ज्येष्ठ: = the eldest son. ऊढ: = (was) married. प्रौढ:=grown up. कलयति = plies. श्रमिणा=hard working. अकर:=unfit for work. श्वासेन रुग्ण:= ill with Asthma. सुधानां उद्धानस्य तले = on the top of a brick stove. कुश्यति स्म = was ailing. वाल: = colt. वयंति=weave. कृषंति = plough. भव्यात् फलात् ऊर्ध्वं अपि=even beyond the coming harvest. संचितं=stored up. करस्य दानाय= for paying the tax. अन्यस्य अर्थस्य साधनाय=for meeting any other need. कंगून् = Italian millet. अवत्स्यन् = would have lived.

पृष्ठं २

यदि एव न अभविष्यत्=if only there had not been. यावत्=as long as. गृह्ये कर्मणि=in house-hold work. अदक्षत्=was able to engage in. सामंतान्

सदृशं = as became good neighbours. वा वा = either or. बिलकेन कार्ये जाते = when need arose of a seive. गोण्या वा पुंसां = or of a bag for men. चक्रे भग्ने = when a wheel was broken. सत्कार: = repair. वच: प्रेषितं = word was sent. प्रतिवेशा: = neighbours. अर्हं= be fitting. मिथ: = one another. साह्यं आचरन्=gave help to. वत्स:=calf खलं=threshing floor. अत्येति= strays into. द्राव्यते = is driven away. हि= indeed. उच्यते= It is said. तालै:=with locks. गूहनं= hiding. परोक्षे मिथ: दूषणं= back-biting one another. व्यस्तं= reversed. अल्पस्य एव हेतो: = only for a small reason. स्नुषा = daughter-in-law. कुक्कुटी=hen. कल्ये ऋतौ = early in the season. सूते=lays. उत्थानं =Resurrection of christ; (lit. rising) चिनुते= gathers. यान शाला = cart-shed. विंदति= finds. सकृत्=once. तर्जिता= scared. वृतिं उल्लंघ्य=crossing the fence. कलकलं= cackling. स्वगतं आह=said to herself. क्षणं =leisure. सज्जा = ready. परे= later. सायं= in the evening.

पृष्ठं ३

देवरं= brother in-law. खुल्ल: = younger. कुट्टी=a pet form of कुक्कुटी। अधात्=laid. आगात्=

came. गतं स्त्रिया = The woman went (lit. it was gone by the woman). साकं= along with विटंके= on the perch. निद्रां गंत्री इव=as if going to sleep. मीलति= shuts. प्रष्टुं= to ask. उत्तरं लब्धुं= to get a reply. नो नः कार्यं=we have no need. रुष्टा=(was) offended. तया किंचित् अत्युक्तं= she talked a little too much. वृद्धया सह प्रत्यदात्= gave it back with interest. मिथः गालिं अदात् = abused each other.

पृष्ठ ४

कलहे ययुजे=joined in the quarrel. उद्दत्य= rushing out. भूतैः अभूतैः च=real and unreal. कलकलः= up-roar. समं= at the same time. चेष्टितं ताभिः=they tried (lit. it was tried by them.) श्लीलं= decent. लङ्वा=slut. कृतं ते सत्वेन= enough of your goodness. चिलकं=seive. घटान्= pots. युगः=yoke. द्वंद्वम्= fight. अपक्षत्=sided with. वारं=crowd. दाढ्याः मुष्टिं= a handful of (his) beard. जातं=happened. वियुक्ताः=separated.

पृष्ठ ५

न गणयंति= do not care for. जाताः= my dear ones. अल्पान् अर्थान् प्रति= about small

things· चिंत्यतां नाम= think it over (lit· let it be thought over)· अर्थः=legal affair· हृतं स्यात्= may have been stolen· किं तेन=what of that. सत् खलु कार्यं= must indeed be made good· कलिः= evil. अर्थस्य अंतः भवतु=let there be an end of this affair· यदि क्रोधं पुष्यसि=if you nourish your anger. अनर्थः=disaster. जल्पं=prattling· स्वं न जातु नमयेत्= should not humble himself· प्रत्युत=on the other hand. सभां=court· प्रांत पालः=the head of the district. अर्थस्य अस्य चलतः= while the case went on.

पृष्ठ ६

जालं = window. गंजा-पालाय= to the tavern keeper. नीतं= (was) taken. पितॄन् अनु=after the (manner of the) fathers. पीडनं= rinsing. कुत्सनं = reviling· करं आयात्=came to hand. ग्राम - सभा = village-court· मंडल-सभा=disrict court· शांति-पालः=justice of the peace· विचारकाः=judge·

पृष्ठ ८

व्रीडितः=put to shame. गुर्वी = big with child· ie. pregnant· दंडपालः=superintendent of police सैबीरिया=name of a tract in Russia· दोषणं = charge· स्थापितं = proved· किरकं =

clerk. ज्येष्ठः = senior.

पृष्ठ ८

कशा=flogging. सिबि-वेत्रेण=with a birch-rod. पांडुः=Pale. धूजिवत्=like a roll of cotton. वरंडं= into the veranda. अधिकृतः=(are) authorised. दृश्यते=It appears.

पृष्ठ ९

स्थायुक्ताः = officers. विवृत्य = disclosing. क्षमां याचेः = you should beg pardon. सूत्रं = section. निर्वाह्यः = (is) to be carried out. जदुल मुखः=with a pock marked face. कश्यः = liable to be whipped.

पृष्ठं १०

सज्जा=harness. गुरु=heavy. आर्द्रः आसीत्= relented. जितः = defeated in law. आम = yes. फलिष्यति = avails.

पृष्ठं ११

दुष्टु = bad. चुल्यां= on the stove. भूमिः= ground. केश्यं =handful of hair. कक्ष-राशिः=hay stack.

पृष्ठं १२

सक्तुः = barley meal. कार्यं = (is) wanted. परेद्यवि = the other day. सैन्यः = soldier.

प्लेव्ना = name of a place. प्रतिवाक्यः=answerable. रटनं=screaming. मुटनं=abusing. भाव्यं= to be thought of. ख्रिष्टः = Christ. चचार = walked.

पृष्ठ १३

पिंछति = torments. पेटं = slap. द्रवत्ति = softness. श्रोता = listener. कल्यतां तावत् =just calculate. रोहणं = riding. मानात् = through pride. भूतं = devil. करणः=a scribe (private)

पृष्ठ १४

ऐषमः = this year. घोटीं = mare. अर्थं = legal affair. महसे=for the feast. मेर्याः = of Mary; the mother of Christ. कूपीं = bottle. द्वारं=expedient. अति-चिरं = too late. शादः = meadow.

पृष्ठ १५

नवेन अक्षेण = with a new law suit. क्षेत्र पद = farm-stead. शरत् – सस्यं = winter-crop. कंठीं = collar. कर्णं = handle. पारे = on the other side. कृणंती = spinning. पाद्वोः कृते = for sandals. वल्क-शल्कान् = bark-slips. सज्जः= ready. भव्यं=pleasant. भासुरं=bright. आसात्= from the bench.

पृष्ठ १७

भग्नः = frustrated. घटी=waist-band. रोटी= bread. पिंडं =porch. अक्षतः=unhurt. नंक्ष्यति= wiu escape. न अपेयात् = cannot get away.

पृष्ठ १८

पर्व = step. उपांत = corner. प्रति-कोणे =at the opposite corner. पटस्य=of the roof. युक्ते= used to. खोलं = a cap. पक्षी इव=like a bird. कर्मणि गृहीतः = caught in the act. कीलं=flame.

पृष्ठ १९

वलिकं = eaves. परिधाय=looking around. पाळि = skirt.

पृष्ठ २०

पश्च कुटीं = back shed. क्रंदितुं = cry out. छन्नं = covered. कोटेभ्यः = form the stalls.

पृष्ठ २५

यथा स्थिताः=as they were. सीराः=ploughs. दंतिकाः = harrows. पेटाः = boxes. तुलां=beam ग्रामिकः = head of the village.

पृष्ठ २२

पराग्-भागे = on the other side. एकला = alone. वर्तिः = candle. संज्ञां = senses.

पृष्ठ २३

क्रुशं = cross, the Xian symbol. न्यासाय = for crossing himself.

पृष्ठ २४

तत् - शीलः= used to it. घरः = house. प्रति-कर्तुं = retaliate. अर्थं=affair. संधातुं=to make up. अवरं = worse.

—

## शुद्धिपत्रं

| पत्रां | पंक्तिः | दुष्टं | साधु |
|---|---|---|---|
| ii | ७ | पश्चिमीयाः | पश्चमीयाः |
| २ | ८ | उच्चते | उच्यते |
| ३ | ९ | गव्रलस्य | गव्रेलस्य |
| ४ | १० | अयात् | आयात् |
| ,, | १२ | उड्डाय | उड्डीय |
| ७ | २० | किंरकं | किरकं |
| ८ | १८ | (द्वयं) कंपितं | कंपितौ |
| ११ | ८ | चुलयां | चुल्यां |
| ११ | ११ | स्यीये | स्वीयाः |
| ११ | १४ | पस्यति | पश्यन्ति |
| १२ | १६ | इरीनां | इरीनायां |
| १३ | ३ | पिंचति | पिंछति |
| १४ | १ | काम | कामं |
| १४ | ६ | इवनः | इवानः |
| १५ | १३ | न्यास्तुं | न्यस्तुं |
| १७ | ११ | मिलतः | मिमेल |
| १९ | १० | अपसरतं | अपासरत् |

| | | | |
|---|---|---|---|
| २१ | १ | वीथ्या | वीथ्या: |
| | ३ | कुटावना | कुटुंबिनः |
| २२ | १३ | घृत-वर्तिः | धृत-वर्तिः |
| २१ | १६ | वस्त्र | वस्त्रं |
| २३ | ११ | ददत् | दक्षात् |
| २३ | १८ | वय | वयं |
| | १९ | निमीलय | निमील्य |

| | | | |
|---|---|---|---|
| ii | ६ | ये | याः |
| v | २१ | जीर्यते | जर्यते |
| xi | १ | भाषा | भाषां |
| xv | ५ | आंर्घी | आंध्रीं |
| २३ | १३ | व्यरमत | व्यरमत् |
| Title back side | | प्रथानः | प्रधानः |

# सर्व-जन-संस्कृत-माला
(EVERY MAN'S SANSKRIT SERIES)

माला इयं सुलभ-संस्कृतस्य प्रचाराय भवेत् इति आशयः। सौलभ्यं अत्र त्रिविधं। पदं लघु, वाक्यं च। न संधिः। प्रायः न समासः। भारतस्य क्षेमाय, मास्तु संस्कृतं कष्टं इति अपवादः। भाष्यते इति भाषा। संस्कृतं अपि एका भाषा। भारतस्य च एका भाषा, या यथा पूर्वं अद्य अपि राज्य-भाषा भवितुं अर्हति। माला च इयं कंठ-भूषा संस्कृत-प्रियाणां।

माला सुमानि :—

१. खन्ड-काव्यं—श्री भा. नरसिंहशास्त्री पंडितः हिंदू-पाटशाला गुंटूरु
२. कीर-संदेशः — श्री ग.लक्ष्मीकांतय्य एम्.ए. वक्ता, निजाम् कलाशाला, हैदराबाद्
३. गंगा-लहरी — श्री के.वि.एन्.अप्पाराव् एम्.ए. प्रधानः, संस्कृत कलाशाला, कोव्वूरु (गोदावरी)
४. कणः लुप्तः गृहं दहति — श्री को.कृष्णसोमयाजी एम्.ए.;एल्.टि.

इति

को.कृष्णसोमयाजी
मंत्री,संस्कृत सेवक समाजः
राजेश्वरीपुरं, गुंटूरु (आंध्राः)



Printed at Panchakshari Press, GUNTUR-2.